* अथ *

आपदुद्धारक-

# बटुक भैरव स्तोत्रम्

* प्रारम्भः *

प्रकाशक—फर्म बाबू बैजनाथ प्रसाद बुकसेलर,

सन् १९४१ राजादरवाजा बनारस सिटी।

श्रीगणेशायनमः ।

# आपदुद्धारक बटुकभैरवस्तोत्रम् ।

मेरुपृष्ठे सुखासीनं देवदेवं जगद्गुरुम् ॥ शंकरं परिपप्रच्छ पार्वती परमेश्वरम् ॥ १ ॥ श्रीपार्वत्युवाच ॥ भगवन्सर्वधर्मज्ञ सर्वशास्त्रागमादिषु ॥ आपदुद्धारणंमंत्रं सर्वसिद्धिप्रदंकरम् ॥ २ ॥ सर्वेषांचैव भूतानां हितार्थं वांछितम्मया ॥ विशेषतस्तुराज्ञां वै शांतिपुष्टिप्रसाधनम् ॥ ३ ॥ अङ्गन्यासकरन्यासैः देहन्याससमन्वितम् ॥ वक्तुमर्हसिदेवेश ममहर्षविवर्द्धनम् ॥४॥ शंकरउवाच ॥ शृणु देविमहामंत्रमापदुद्धारहेतुकम् ॥ सर्वदुःखप्रशमनं सर्वशत्रुविनाशनम् ॥ ५ ॥ आपस्मारादिरोगानां ज्वरादीनांविशेषतः ॥ नाशनं स्मृति मात्रेण मंत्रराजमिमंप्रिये ॥ ६ ॥ ग्रहरोगभयानां च नाशनंसुखवर्द्धनम् ॥ स्नेहाद्वक्ष्यामि ते मंत्रं सर्वसा-

रमिभंप्रिये ॥ ७ ॥ सर्वकामार्थदं पुण्यं राज्यं भोगप्रदंनृणाम् ॥ आप-
दुद्धारणमिति मंत्रंवक्ष्याम्यशेषतः ॥ ८ ॥ प्रणवंपूर्वमुद्धृत्यबीजं प्रणव
मुद्धरेत् ॥ बटुकायेति वै पश्चादापदुद्धारणाय च ॥ ९ ॥ कुरुद्वयं ततः
पश्चाद् बटुकाय पुनः क्षिपेत् ॥ देवीप्रणवमुद्धृत्य मंत्रोद्धारमिमंप्रिये ॥
॥ १० ॥ मंत्रोद्धारमिदंदेवि त्रैलोक्यस्यापि दुर्लभम् ॥ ओं ह्रीं बं बटु
काय आपदुद्धारणायकुरुकुरु बटुकाय ह्रीं ॥ अप्रकाश्यमिमम्मन्त्रं सर्व-
शक्तिसमन्वितम् ॥ ११ ॥ स्मरणादेवमंत्रस्य भूतप्रेतपिशाचकाः ॥
विद्रवंत्यतिभीता वै कालरुद्रादिवप्रजाः ॥ १२ ॥ पठेद्वा पाठयेद्वापि-
पूजयेद्वापिपुस्तकम् ॥ अग्नि चौर भयं तस्य ग्रहराज भयं तथा ॥
॥ १३ ॥ न च मारीभयंकिंचित् सर्वत्रसुखवान्भवेत् ॥ आयुरारोग्य-
मैश्वर्यं पुत्रपौत्रादि संपदः ॥ १४ ॥ भवंतिसततंतस्य पुस्तकस्यापि

पूजनात् ॥ न दारिद्र्यं न दौर्भाग्यं नापदा भयमेव च ॥ १५ ॥
श्रीपार्वत्युवाच ॥ ॐ एष भैरवी नाम आपदुद्धारणोमतः । त्वया च
कथितो देव भैरवः कल्पवित्तमः ॥ १६ ॥ तस्य नामसहस्राणि अयु-
तान्यर्बुदानि च ॥ सारमुद्धृत्यतेषां वै नामाष्ट शतकं वद ॥ १७ ॥
यानि संकीर्तयन्मर्त्यः सर्वदुःख विवर्जितः ॥ सर्वान्कामानवाप्नोति
साधकः सिद्धिमेवच ॥ १८ ॥ ईश्वरउवाच ॥ शृणुदेवि प्रवक्ष्यामि
भैरवस्य महात्मनः ॥ आपदुद्धारणस्येदं नामाष्टशतमुत्तमम् ॥ १९ ॥
सर्वपापहरं पुण्यंसर्वापत्तिविनाशनम् ॥ सर्वकर्मार्थदंदेवि साधकानांसु-
खावहम् ॥ २० ॥ सर्वमङ्गलमांगल्यं सर्वोपद्रवनाशनम् ॥ आयुष्करं
पुष्टिकरं श्रीकरं च यशस्करम् ॥ २१ ॥ नामाष्टशतकस्यास्य छन्दोनु-
ष्टुप्प्रकीर्तितः ॥ बृहदारण्यको नाम ऋषिर्देवोथ भैरवः ॥ २२ ॥

लज्जाबीजं बीजमिति वटुकायेति शाक्तिकम् ॥ प्रणवः कीलकं प्रोक्त-मिष्टसिद्धौनियोजयेत् ॥२३॥ अष्टबाहुं त्रिनयनामितिबीजंसमाहितम् ॥ शक्तिः कं कीलकंशेषामिष्टसिद्धौनियोजयेत् ॥ २४ ॥ अथन्यासः ॥ ओं ह्रीं वां हृदयायनमः ॥ ओं ह्रीं वां शिरसे स्वाहा । ॐ ह्रूं वूं शिखायैवषट् ॥ ॐ ह्रैः वैः कवचायहुम् ॥ ॐ ह्रौं वौं नेत्रत्रयायवौषट् ॥ ॐ हः वः अस्त्रायफट् ॥ इत्यङ्गन्यास ॥ अथ करन्यासः ॥ ॐ ह्राँ वाँ अंगुष्ठाभ्यां नमः ॥ ॐ ह्रीं वीं तर्जनीभ्यां नमः ॐ ह्रूँ वूँ मध्यमाभ्यां नमः ॥ ॐ ह्रैं वैं अनामिकाभ्यां नमः ॥ ॐ ह्रां वां करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ अथ देहन्यासः ॥ भैरवंमूर्ध्निविन्यस्य ललाटेभीमदर्शनम् ॥ नेत्रयोर्भूतहननं सारमेयानुगंभ्रुवोः ॥ २५ ॥ कर्णयोर्भूतनाथं च प्रेतबाहुकपोलयोः ॥ नासापुटौष्ठयोश्चैव भस्मांगं

सर्वभूपणम् ॥ २६ ॥ अनादिनाथंसौम्ये च शक्तिहस्तंगलेन्यसेत् ॥
स्कन्धयोर्दैत्यशमनेबाहोरतुलतेजसम् ॥ २७ ॥ पार्श्वयोः कपालिनंन्य
स्यहृदयेमुंडमालिनम् ॥ शांतंवक्षस्थलेन्यस्यस्तनयोः शमचारिणम् ॥
॥ २८ ॥ उदरे च सदातुष्टं क्षेत्रेशं पार्श्वयोस्तथा ॥ क्षेत्रपालं पृष्ठदेशे
क्षेत्रज्ञं नाभिदेशके ॥ २६ ॥ पापौघंनाशनंकट्यां बटुकंलिंगदेशके ॥
गुदे रक्षाकरंन्यस्य तथा वा रक्तलोचनम् ॥ ३० ॥ जानुनोर्घर्घरारावं
जंघयोरक्तपाणिनम् । गुल्फयोःपादुकासिद्धंपादपृष्ठेसुरेश्वरं ॥ ३१ ॥
आपादमस्तकं चैव आपदुद्धारकं तथा ॥ पूर्वेडमरुहस्तं च दक्षिणे दण्डधा-
रिणम् ॥ ३२ ॥ खड्गहस्तं पश्चिमे च घण्टावादनमुत्तरे ॥ आग्नेय्याम-
ग्निवर्णं च नैर्ऋत्ये च दिगम्बरम् ॥ ३३ ॥ वायव्यांसर्वभूतस्थमैशान्ये-
चाष्टसिद्धिदम् ॥ ऊर्ध्वंखचारिणंन्यस्य पाताले रौद्र रूपिणम् ॥ ३४ ॥

एवंन्यस्यस्वदेहे च षडङ्गेषुततोन्यसेत् ॥ रुद्रमंगुष्ठयोर्न्यस्य तर्जन्योश्चदिवाकरम् ॥ ३५ ॥ शिवंमध्यमयोर्न्यस्य नासिकायांत्रिशूलिनम् ॥ ब्रह्माणं तु कनिष्ठिक्यां स्तनयोस्त्रिपुरांतकम् ॥ ३६ ॥ मांसाशिनंकराग्रेतु करपृष्ठेदिगंबरम् ॥ अथनामांगन्यासः ॥ हृदयेभूतनाथाय आदिनाथाय मूर्द्धनि ॥ ३७ ॥ आनंदपादपूर्वायनाथाय च शिखासु च ॥ सिद्धसावरनाथाय कवचं विन्यसेत्तथा ॥ ३८ ॥ सहजानंदनाथायन्यसेन्नेत्रत्रयेषु च ॥ परमानन्दनाथाय अस्त्रंचैव प्रयोजयेत् ॥ ३९ ॥ एवंन्यासविधिंकृत्वा यथावत्तदनंतरम् ॥ ध्यानंतस्यप्रवक्ष्यामि यथाध्यात्वापठेन्नरः ॥ ॥ ४० ॥ शुद्धस्फटिकसंकाशं सहस्रादित्यवर्चसम् ॥ नीलजीमूतसंकाशं नीलांजनसमप्रभम् ॥ ४१ ॥ अष्टबाहुंत्रिनयनंचतुर्बाहुंद्विबाहुकम् ॥ दंष्ट्राकरालवदनं नूपुरारावसंकुलम् ॥ ४२ ॥ भुजंगमेखलंदेवमग्निवर्ण-

शिरोरुपम् ।। दिगंबरंकुमारीशं बटुकाख्यंमहाबलम् ।। खट्वांगमसिपा-
शं च शूलदक्षिणभागतः ।। ४३ ।। डमरुञ्चकपालं च वरदेभुजगंतथा
अग्निवर्णसमोपेतं सारमेयसमन्वितम् ।। ध्यात्वाजपेत्सुसंतुष्टः सर्वान्का-
मानवाप्नुयात् ।। ४४ ।। तत्रांतरे अथसात्विकध्यानम् ।। बंदेबालंस्फ-
टिकसदृशं कुंडलोद्भासिवक्त्रं दिव्याकल्पैर्नवमणिमयैः किंकिणीनूपुरा-
ढ्यैः ।। दीप्ताकारं विशदवदनं सुप्रसन्नं महेशम् । हस्ताब्जाभ्यांबटुक-
मनिशं शूलखड्गौदधानम् ।। अथ राजसम् । उद्यद्भास्करसन्निभंत्रिनयनं
रक्ताङ्गरागस्रजं । स्मेरास्यम्बदनङ्कपालमभयं शूलंदधानंकरैः ।। नील-
ग्रीवमुदारभूषणयुतं शीतांशुखंडोज्वलं । बंधूकारुणवाससंभयहरं देवं-
सदाभावयेत् ।। अथ तामसध्यानम् ।। ध्यायेत्रैलोक्यकान्तशशांककल-
धरं मुंडमालं महेशम् ।। दिग्वस्त्रंपिंगकेशं डमरुमथसृणिं खड्गशूलंदधा-

नम् ॥ नागंघंटांकपालंकरसरसिरुहैर्विभ्रतंभीमदंष्ट्रं सर्पाकल्पत्रिनेत्रंमणिमयविलसत्किंकिणीनूपुराढ्यम् ॥ इतिध्यानत्रयम् ॥ सात्विकध्यानमाख्यातञ्चतुर्वर्गफलप्रदम् ॥ राजसं कार्यशुभदं तामसं शत्रुनाशनम् ॥ ध्यात्वाजपेत्सुसंहृष्टःसर्वान्कामानवाप्नुयात् ॥ आयुरारोग्यमैश्वर्यसिद्ध्यर्थंविनियोजयेत् । अस्य श्रीबटुकभैरवनामाष्टशतकस्य आपुद्धारणस्तोत्रमंत्रस्यबृहदारण्यकोनामऋषिः । श्रीबटुकभैरवो देवता अनुष्टुप्छंदः । ह्रीं बीजं बटुकायेतिशक्तिः ॥ प्रणवः कीलकम् ॥ अभीष्टसिद्ध्यर्थेजपेविनियोगः ॥ ह्रीं ह्रौं नमः शिवाय नमस्कारमंत्रः ॥

ॐ करकलितकपालःकुंडलीदंडपाणिस्तरुणतिमिरनीलव्यालयज्ञोपवीती क्रतुसमयसपर्य्याविघ्नविच्छेदहेतुर्जयति बटुकनाथःसिद्धिदः साधकानाम्॥

ॐ भैरवो भूतनाथश्च भूतात्माभूतभावनः ॥ क्षेत्रज्ञः क्षेत्रपालश्च

क्षेत्रज्ञः क्षत्रियोविराट् ॥ १ ॥ श्मशानवासीमांसाशीखर्पराशीमखांत कृत् । रक्तपः पानपः सिद्धिः सिद्धिदः सिद्धिसेवितः ॥ २ ॥ कंकाल कामशमनः कलाकाष्ठातनुः कविः ॥ त्रिनेत्रोबहुनेत्रश्च तथा पिंगल-लोचनः ॥ ३ ॥ शूलपाणिः खड्गपाणिः कङ्कालीधूम्रलोचनः ॥ अभी-रुर्भैरवीनाथो भूतपो योगिनीपतिः ॥ ४ ॥ धनदोधनहारी च धनवान् प्रतिभानवान् ॥ नागहारो नागपाशो व्योमकेशः कपालभृत् ॥ ५ ॥ कालः कपालमाली च कमनीयः कलानिधिः ॥ त्रिलोचनोज्वलन्नेत्र-स्त्रिशिखीचात्रिलोकपः ॥ ६ ॥ त्रिनेत्रतनयोडिंभः शान्तः शांतजन-प्रियः ॥ बटुकोबहुवेषश्च खट्वांगवरधारकः ॥ ७ ॥ भूताध्यक्षः पशुपतिः भिक्षुकः परिचारकः ॥ धूर्तोदिगंबरः शौरिर्हरिणः पाण्डुलोचनः ॥ ८ ॥ प्रशांतः शांतिदः शुद्धः शंकरः प्रियबांधवः ॥ अष्टमूर्तिर्निधीशश्चज्ञान-

आ. चक्षुस्तपोमयः ॥ ९ ॥ अष्टाधारः षडाधारः सर्पयुक्तः शिखीसखा ॥ भूधरोभूधराधीशो भूपतिर्भूधरात्मजः ॥ १० ॥ कङ्कालधारीमंडी च नागयज्ञोपवीतकः ॥ जृंभणो मोहिनस्तंभी मारणः क्षोभणस्तथा ॥११॥ शुद्धो नीलांजनप्रख्यो प्रत्यहामुराडभूषितः । बलिभुग्बलिभुङ्नाथो बालोबालपराक्रमः ॥ १२ ॥ सर्वापत्तारणो दुर्गो दुष्टभूतनिसेवितः ॥ कामीकलानिधिः कांतः कामिनीवशकृद्वशी ॥ १३ ॥ सर्वासिद्धिप्रदो-वैद्यः प्रभुविष्णुरितीव ह ॥ अष्टोत्तरशतंनाम्नां भैरवस्यमहात्मनः॥१४॥ मयातेकथितं देवि रहस्यं सर्वकामदम् । य इदं पठतेस्तोत्रंनामाष्टशत-मुत्तमम् ॥ १५ ॥ न तस्य दुरितंकिंचिन्नैव भूतभयं तथा ॥ न च मारीभयं तस्यग्रहराजभयं तथा ॥ १६ ॥ न शत्रुभ्योभयं किंचित्प्रा-प्नुयान्मानवः क्वाचित् ॥ पातकानांभयंनैवपठेत्स्तोत्रमनुत्तमम् ॥ १७ ॥

मारीभयेराजभयेतथाचौराग्निजेभये ॥ औत्पातिकभयेचैव तथादुःस्व-
प्नजे भये ॥ १८ ॥ बंधने च तथा घोरे पठेत्स्तोत्रमनुत्तमम् ॥ सर्व-
प्रशममायातिभयं भैरवकीर्तिनात् ॥ १६ ॥ एकादशसहस्रैस्तुपुरश्चरण-
मुच्यते ॥ यस्त्रिसंध्यपठेद्देविसम्वत्सरमतन्द्रितः ॥ २० ॥ ससिद्धिमाप्नु-
यादिष्टांदुर्लभोऽपि च मानवः ॥ षण्मासाद्भूमिकामस्तुजापित्वाप्राप्नु-
यान्महीम् ॥ २१ ॥ राजशत्रुविनाशार्थंपठेन्मासाष्टकंयदि । रात्रौवा-
स्त्रयंदेविनाशयेत्सर्वंशत्रुकान् ॥ २२ ॥ जपेन्मासत्रयम्मर्त्योराजानम्वशा-
मानयेत् ॥ धनार्थी च सुतार्थी च दारार्थी चापिमानवः ॥ २३ ॥ पठे-
न्मासत्रयंदेविवारमेकन्तथानिशि ॥ धनपुत्रांस्तथादारां प्राप्नुयान्नात्र-
संशयः ॥२४॥ रोगीरोगात्प्रमुच्येत बद्धोमुच्येतबन्धनात् ॥ भीतोभया-
त्प्रमुच्येत देविसत्यं न संशयः ॥२५॥ निगडैश्चापि यो बद्धः कारागृहानि-

पातितः ॥ शृंगलाबंधनंप्रासः पठेच्चेद्यादिवानिशम् ॥ २६ ॥ यान्यान्स-
मीहतेकामांस्तांस्तान्प्राप्नोतिनिश्चितम् ॥ अप्रकाश्यमिदंगुह्यं न देयंयस्य
कस्यचित् ॥ २७ ॥ सुकुलीनायशांताय ऋजवेदम्भवर्जिते ॥ दद्या-
त्स्तोत्रमिदंपुण्यंसर्वकामफलप्रदम् ॥ इति श्रुत्वा ततो देवीनामाष्टशत-
मुत्तमम् ॥ २८ ॥ संतोष परमं प्राप्यं भैरवस्य महात्मनः ॥ भैरवस्य
प्रसन्ना भूत्सर्वलोकमहेश्वरी ॥ २९ ॥ भैरवस्तु प्रहृष्टो भूत्सवर्गः परमे-
श्वरः ॥ जजापपरयाभक्त्यासदासर्वेश्वरेश्वरी ॥ ३० ॥

इति श्रीरुद्रयामल ईश्वरपार्वतीसम्वादे बटुकभैरवस्तोत्रम्

❀ समाप्तम् ❀

पण्डित श्रीबालमुकुन्द पाण्डेयेन संस्कृतम् ।

पं० श्रीलाल उपाध्याय द्वारा—श्रीविश्वेश्वर प्रेस, बुलानाला काशी में मुद्रित ।

